ॐ

॥ श्रीगुरुभ्यो नमः ॥

# शारीरकमीमांसादर्शनम् ॥

(१)-अथाऽतो ब्रह्मजिज्ञासा ॥१॥ (२)-जन्माऽऽद्यस्य यतः॥२॥(३)-शास्त्रयोनित्वात् ॥ ३ ॥ (४)-तत्तु समन्वयात्

(१) वल्लभाचार्याणां मते जन्माद्यस्य यतः ॥ २ ॥ शास्त्रयोनित्वाद् ॥ ३ ॥ इति-सूत्राभ्यामेकमधिकरणम् ।

न्वयात् ॥ ४ ॥ (५)-ईक्षतेर्नाऽशब्दम्
॥ ५ ॥ गौणश्चेन्नाऽऽत्मशब्दात् ॥६॥
तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥ हे
यत्वाऽवचनाच्च ॥ ८ ॥ स्वाऽप्ययात्
॥९॥ गतिसामान्यात् ॥ १० ॥ श्रु
तत्वाच्च ॥ ११ ॥ (६)-आनन्दमयोऽ
भ्यासात् ॥ १२ ॥ विकारशब्दान्नेति
चेन्न प्राचुर्य्यात् ॥ १३ ॥ तद्धेतु
व्यपदेशाच्च ॥ १४ ॥ मान्त्रवर्णिकं
च गीयते ॥ १५ ॥ नेतरोऽनु

(१) वल्लभाचार्याणां मते गीयत इत्यस्य-स्थाने गम्यत इति क्वचित्पाठान्तरम् ।

पत्तेः ॥ १६ ॥ भेदव्यपदेशाच्च ॥ १७ ॥ कामाच्च नाऽनुमानाऽपेक्षा ॥ १८ ॥ अस्मिन्नस्य च तद्योगं शास्ति ॥१९॥ (७)-अन्तस्तद्धर्मोपदेशात् ॥ २० ॥ भेदव्यपदेशाच्चाऽन्यः ॥२१ ॥ (८)-आकाशस्तल्लिङ्गात्॥२२॥(९)-अत एव प्राणः॥२३॥ (१०)-ज्योतिश्चरणाऽभिधानात्॥२४॥ छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥ २५॥

(१) मध्वाचार्याणां मते एकस्यैवास्य सूत्रस्यैकाधिकरणत्वम् ।

भूताऽऽदिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥२७॥ (१०)-प्राणस्तथाऽनुगमात् ॥ २८ ॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २९ ॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥३०॥ जीवमुख्यप्राऽणलिङ्गान्नेति चेन्नोपाऽऽसात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥ (११)अथाऽत्र एकत्रिंशत् ॥

॥ इति वैयासिक्यां शारीरकमीमांसायां प्रथमस्याऽध्यायस्य प्रथमः पादः ॥ १ ॥ १ ॥

(१)-सर्वत्र प्रसिद्धोपदेशात् ॥१॥ विवक्षितगुणोपपत्तेश्च ॥ २ ॥ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥ कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥ शब्दविशेषात् ॥ ५ ॥ स्मृतेश्च ॥ ६ ॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥८॥ (२)-अत्ता चराचरग्रहणात् ॥९॥ प्रकरणाच्च ॥१०॥ (३)-गुहां प्रविष्टावात्मा-

(१) वल्लभाचार्याणां मते इत आरभ्यान्यदधिकरणम् ।)

नौ हि तद्दर्शनात् ॥ ११ ॥ विशेष-
णाच्च॥१२॥(४)-अन्तर उपपत्तेः॥१३॥
स्थानाऽऽदिव्यपदेशाच्च ॥ १४ ॥ सु-
खविशिष्टाऽभिधानादेव च ॥ १५ ॥
श्रुतोपनिषत्कगत्यभिधानाच्च ॥१६॥
अनवस्थितेरसम्भवाच्च नेतरः ॥१७॥
(५)-अन्तर्य्याम्यधिदैवाऽऽदिषु तद्ध-
र्म्मव्यपदेशात्॥१८॥ न च स्मार्त्तमत-
द्धर्म्माऽभिलापात् ॥१९॥शारीरश्चोभ-
येऽपि हि भेदेनैनमधीयते॥२०॥(६)
अदृश्यत्वादिगुणको धर्म्मोक्तेः ॥२१॥
विशेषणभेदव्यपदेशाभ्यां च नेतरौ

॥२२॥रूपोपन्यासाच्च ॥२३॥ (७)-वैश्वानरस्साधारणशब्दविशेषात्॥२४॥ स्मर्यमाणमनुमानं स्यादिति ॥२५॥ शब्दाऽऽदिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥ २६ ॥ अत एव न देवता भूतञ्च ॥ २७ ॥ साक्षादप्यविरोधं जैमिनिः ॥२८ ॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥ अनुस्मृतेर्बादरिः ॥ ३० ॥ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

(१) पुरुषविधमपीति द्वैतिनां पाठः ।

आमनन्ति चैनमस्मिन् ॥ ३२ ॥(७)
सर्वत्र द्वात्रिंशत् ।

॥ इति वैयासिक्यां शारीरकमीमांसायां
प्रथमस्याऽध्यायस्य द्वितीयः पादः ॥ १॥ २॥

(१)-द्युभ्वाद्यायतनं स्वशब्दात्॥१॥
मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥ नानु-
मानमतच्छब्दात् ॥ ३ ॥ प्राऽणभृच्च
॥ ४ ॥ भेदव्यपदेशात् ॥ ५ ॥ प्र-
करणात् ॥ ६ ॥ स्थित्यदनाभ्यां च
॥ ७ ॥ (२)-भूमासम्प्रसादादध्युपदे-
शात्॥८॥धर्मोपपत्तेश्च ॥९॥(३)-अक्ष-

रम्बराऽन्तधृतेः ॥ १० ॥ सा च प्र-
शासनात् ॥ ११ ॥ अन्यभावव्यावृ-
त्तेश्च ॥१२॥ (४)-ईक्षतिकर्मव्यपदेशा-
त्सः ॥१३॥ (५)-दहर उत्तरेभ्यः ॥१४॥
गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च
॥ १५ ॥ धृतेश्च महिम्नोऽस्याऽस्मि-
न्नुपलब्धेः ॥ १६ ॥ प्रसिद्धेश्च ॥१७॥
इतरपरामर्शात्स इति चेन्नाऽसम्भवात्
॥१८॥ (६)-उत्तराच्चेदाविर्भूतस्वरूप-
स्तु॥१९॥ अन्याऽर्थश्च परामर्शः॥२०॥
अल्पश्रुतेरिति चेत्तदुक्तम्॥२१॥(७)-

(१) द्वैतिनां मते एतदन्तं दहराधिकरणम्।

अनुकृतेस्तस्य च ॥ २२ ॥ अपि च स्मर्य्यते॥२३॥(८)-शब्दादेव प्रमितः ॥ २४ ॥ हृद्यपेक्षया तु मनुष्याऽधिकारत्वात्॥२५॥(९)-तदुपर्य्यपि बादराऽयणस्सम्भवात् ॥ २६ ॥ विरोधः कर्मणीति चेन्नाऽनेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥ शब्द इति चेन्नाऽतः प्रभवात्प्रत्यक्षाऽनुमानाभ्याम् ॥ २८ ॥ अत एव च नित्यत्वम् ॥२९॥ समाननामरूपत्वाच्चाऽऽवृत्तावप्यविरोधो

(१) द्वैतिनां मते चकाररहितः पाठः क्वचिद्दृश्यते ।

दर्शनात्स्मृतेश्च ॥ ३० ॥ मध्वादि-
ष्वसम्भवादनधिकारं जैमिनिः॥३१॥
ज्योतिषि भावाच्च ॥ ३२ ॥ भावं तु
बादरायणोऽस्ति हि॥३३॥(१०)-शु-
गस्य तदनादरश्रवणात्तदाद्रवणात्सू-
च्यते हि ॥ ३४ ॥ क्षत्रियत्वावगते-
श्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥
संस्कारपरामर्शात्तदभावाऽभिलापाच्च
॥ ३६ ॥ तदभावनिर्धारणे च प्रवृत्तेः
॥३७॥ श्रवणाऽध्ययनाऽर्थप्रतिषेधा-
त्स्मृतेश्च॥३८॥(११)-कम्पनात्॥३९॥
(१२)-ज्योतिर्दर्शनात् ॥४०॥ (१३)-

आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥ (१४)-सुषुप्त्युत्क्रान्त्योर्भेदेन ॥४२॥ पत्यादिशब्देभ्यः ॥४३॥(१४) द्युभ्वाद्यायतनं त्रिचत्वारिंशत् ॥

॥ इति वैयासिक्यां शारीरकमीमांसायां प्रथमस्याऽध्यायस्य तृतीयः पादः ॥१॥३॥

(१)-आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥ सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥ तदधीनत्वादर्थवत् ॥ ३ ॥

---

(१) द्वैतिनां मते इदमेकमेव सूत्रं पृथगधिकरणम् । ४ प्रधान [illegible]

ज्ञेयत्वावचनाच्च ॥ ४ ॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥६॥ महद्वच्च ॥७॥ (२)-चमसवदविशेषात् ॥ ८ ॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥१०॥ (३)-न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥ प्राणादयो वाक्यशे-

---

(१) द्वैतिनां मते प्रकरणादिति पृथक् सूत्रम्।

(२) द्वैतिनां मते इत आरभ्य द्वितीयमधिकरणम्।

पात् ॥ १२ ॥ ज्योतिषैकेषामसत्यन्ने ॥१३॥(४)-कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः ॥ १४ ॥ समाकर्षात् ॥ १५ ॥ (५)-जगद्वाचित्वात् ॥ १६ ॥ जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥ अन्यार्थन्तु

(१) द्वैतिनां मते इत आरभ्य काशकृत्स्न इत्यन्तमेकमधिकरणम् ।

(२) इत आरभ्य पञ्चमाधिरणं द्वैतिनां मते ।

(३) वल्लभाचार्याणां मते ज्ञादिति चेत्तद्व्याख्यातमिति पाठः ॥ द्वैतिनां मते ज्ञादिति चेन्न तद्व्याख्यातमिति पाठः ।

जैमिनिः प्रश्नव्याख्यानाभ्यामपि चै-
वमेके ॥ १८ ॥ (६)-वाक्यान्वयात्
॥ १९ ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः
॥ २० ॥ उत्क्रमिष्यत एवम्भावादि-
त्यौडुलोमिः ॥ ॥ २१ ॥ अवस्थिते-
रिति काशकृत्स्नः ॥ २२ ॥ (७)-प्र-
कृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्
॥ २३ ॥ अभिध्योपदेशाच्च ॥ २४ ॥
साक्षाच्चोभयाऽऽम्नानात् ॥ २५ ॥

---

(१) द्वैतिनां मते इत आरभ्य हीयते इ-
त्यन्तमेकमधिकरणम् ।

आत्मकृतेः परिणामात् ॥ २६ ॥ योनिश्च हि गीयते ॥ २७ ॥ एतेन सर्वे व्याख्याताव्याख्याताः ॥ २८ ॥(७) आनुमानिकमष्टाविंशतिः ॥

(१) आत्मकृतेरित्येकं परिणामादित्यपरं सूत्रमिति सूत्रद्वयं विशिष्टाद्वैतिनां मते।

(२) इदमेकमेव सूत्रं पृथगधिकरणं सर्वव्याख्याननामकं द्वैतिनां विशिष्टाद्वैतिनां च मते।

॥ इति वैयासिक्यां शारीरकमीमांसायां ॥
प्रथमस्याऽध्यायस्य चतुर्थः पादः ॥
॥ १ ॥ ४ ॥ समाप्तोध्यायश्च

अथ द्वितीयोऽध्यायः।

(१)-स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नाऽन्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥ इतरेषाञ्चाऽनुपलब्धेः॥२॥(२) एतेन योगः प्रत्युक्तः॥३॥ (३)-न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥ अभिमानिव्यपदेशस्तु विशेषानुगति-

---

(१) प्रत्युक्त इत्यन्तेन प्रथमाधिकरणसमाप्तिर्द्वैतिनां मते।

(२) एतत्सूत्रस्याग्रे 'दृश्यते तु' इति द्वैतिनां मते एकं सूत्रमधिकं पठ्यते। तेनैवाधिकरणसमाप्तिश्च।

(३) द्वैतिनां मते इतोधिकरणान्तरारम्भः।

भ्याम् ॥ ५ ॥ दृश्यते तु ॥ ६ ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥७॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥ न तु दृष्टान्तभावात् ॥ ९ ॥ स्वपक्षदोषाच्च ॥ १० ॥ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥११॥(२)-एतेन शिष्टापरि-

(१) द्वैतिनांमते दृश्यते चेति पाठोनेनैवाधिकरणसमाप्तिश्च ।

(२) विशिष्टाद्वैतिनां मते तर्काप्रतिष्ठानादपीत्येकमवशिष्टमपरं सूत्रमिति ज्ञेयम् । द्वैतिनां मते ष्ठानादन्यथाप्यनुमेयेति पाठः ।

ग्रहा अपि व्याख्याताः ॥१२॥(५)-
भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥
॥१३॥(६)-तदनन्यत्वमारम्भणशब्दा-
दिभ्यः ॥१४॥ भावे चोपलब्धेः ॥१५॥
सत्त्वाच्चावरस्य ॥ १६ ॥ असद्व्यपदे-
शान्नेति चेन्न धर्म्मान्तरेण वाक्यशे-
षात् ॥ १७ ॥ युक्तेश्शब्दान्तराच्च

(१) असदितीत्यारभ्यैतदन्तं चतुर्थमधिकरणं द्वैतिनां मते।

(२) चापरस्येति पाठो विशिष्टाद्वैतिनां मते।

(३) युक्ते श्शब्दान्तराच्चेत्यग्रिमसूत्रेणसहेदमेकमेव सूत्रं विशिष्टाद्वैतिनां मते ।

॥ १८ ॥ पटवच्च ॥ १९ ॥ यथा चे
प्राणादिः[2] ॥ २० ॥ (७)-इतरव्यपदेशा-
द्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥
अधिकं तु भेदनिर्देशात् ॥ २२ ॥
अश्मादिवच्च तदनुपपत्तिः॥२३॥(८)-
उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि
॥२४॥देवादिवदपि लोके ॥२५॥(९)-
कृत्स्न[3]प्रसक्तिर्निरवयवत्वशब्दकोपो

(१) चरद्दितः पाठो द्वैतिनां मते।

(२) प्राणादिरिति पाठो विशिष्टाद्वैतिनां क्वचिद्द्वैतिनां च मते।

(३) इत आरभ्य विकरणत्वेति सूत्रपर्यन्तं विशिष्टाद्वैतिनां मते एकमधिकरणम्।

वों॥२६॥श्रुतेस्तु शब्दमूलत्वात्॥२७॥ आत्मनि चैवं विचित्राश्च हि॥ २८ ॥ स्वपक्षदोषाच्च॥२९॥(१०)-सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ विकरणत्वान्नेति चेत्तदुक्तम् ॥३१॥(११)-न प्रयोजनवत्त्वात् ॥३२॥ लोकवत्तु लीलाकैवल्यम् ॥३३॥(१२)-वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥ न कर्माऽविभागादिति चेन्नाऽनादित्वा-

(१) इतरव्यपदेशेत्यारभ्यैतदन्तमेकमधिकरणं द्वैतिनां मते।

(२) न कर्म विभेति वल्लभाचार्यमते पाठः।

त् ॥३५॥ उपपद्यते चाप्युपलभ्यते च ॥३६॥ (१३)-सर्वधर्म्मोपपत्तेश्च ॥३७॥ (१३)स्मृतिस्सप्तत्रिंशत् ॥

॥ इति वैयासिक्यां शारीरकमीमांसायां द्वितीयस्याऽध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥

(१)-रचनानुपपत्तेश्च नाऽनुमानम् ॥ १ ॥ प्रवृत्तेश्च ॥ २ ॥ पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥ व्यतिरेकानव-

(१) विशिष्टाद्वैतिनां मते द्वात्रिंशत्तमसूत्रमारभ्य यावत्पादसमाप्ति एकमेवाधिकरणम्।

(२) इदं सूत्रं विशिष्टाद्वैतिनां मते नास्ति।

स्थितेश्चाऽनपेक्षत्त्वात्¹ ॥४॥ अन्यत्रा-
ऽभावाच्च न तृणाऽऽदिवत् ॥ ५ ॥
³अभ्युपगमेऽप्यर्थाऽभावात् ॥ ६ ॥ पु-
रुषाऽश्मवदिति चेत्तथाऽपि ॥ ७ ॥
अङ्गित्वाऽनुपपत्तेश्च ॥ ८ ॥ ⁴अन्यथाऽ-

(१) एतदन्तं द्वैतिनां मते आद्यमधिकरणम्।

(२) द्वैतिनां मते इदमेकमेव सूत्रं तृतीय-मधिकरणम्। इदं सूत्रं विशिष्टाद्वैतिनां मते-न्यथानुमितौ चेति सूत्रोत्तरं पठ्यते।

(३) तद्भाष्ये तत्सूत्रवृत्तौ च क्रमेण तत्रापीति, तथापीति च द्वैतिनां मते पाठभेदौ दृश्येते।

(४) इत आरभ्य द्वैतिनां मतेधिकर-णमन्यत्।

नुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥
विप्रतिषेधाच्चाऽसमञ्जसम् ॥१०॥(२)
महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्
॥ ११ ॥ (३)-उभयथाऽपि न कर्माऽ-
तस्तदभावः ॥ १२ ॥ समवायाऽभ्यु-
पगमाच्च साम्यादनवस्थितेः ॥ १३ ॥
नित्यमेव च भावात् ॥१४॥ रूपाऽऽ-
दिमत्त्वाच्च विपर्य्ययो दर्शनात्
॥ १५ ॥ उभयथा च दोषात् ॥ १६ ॥

(१) इत आरभ्यापरिग्रहेति सूत्रपर्यन्तमे-
कमधिकरणं द्वैतिनां विशिष्टाद्वैतिनां च मते ।
(२) उभयथापि च दोषेति वल्लभाचार्य-
मते पाठः ।

अपरिग्रहाच्चाऽत्यन्तमनपेक्षा ॥ १७॥
(१)-समुदाय उभयहेतुकेऽपि तदप्राऽ-
प्तिः ॥ १८ ॥ इतरेतरप्रत्ययत्त्वादिति
चेन्नोत्पत्तिमात्रनिमित्तत्त्वात् ॥ २९ ॥
उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥
असति प्रतिज्ञोपरोधो यौगपद्यमन्य-
थो ॥२१॥ प्रतिसङ्ख्याऽप्रतिसङ्ख्या-

---

(१) इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वादिति । एतत्सूत्रस्य पाठो विशिष्टाद्वैतिनां मते।

(२) अन्यथा चेति विशिष्टाद्वैतिनां मते पाठः ।

निरोधाऽप्राऽऽप्तिरविच्छेदात् ॥ २२ ॥ उभयथा च दोषात् ॥ २३ ॥ आकाशे चाऽविशेषात् ॥ २४ ॥ अनुस्मृतेश्च ॥ २५ ॥ नाऽसतोऽदृष्टत्वात् ॥ २६ ॥ उदसीनानामपि चैवं सिद्धिः ॥ २७ ॥ (५)-नाऽभाव उपलब्धेः ॥ २८ ॥ वैधर्म्याच्च न स्वप्नाऽऽदिवत् ॥ २९ ॥ न भावोऽनुपलब्धेः ॥३०॥ क्षणिकत्वाच्च[२] ॥ ३१ ॥

(१) इत आरभ्य न स्वप्नादिवदित्यन्तमेकमधिकरणं द्वैतिनां मते ।

(२) इदं सूत्रं विशिष्टाद्वैतिनां नये नास्ति ।

सर्वथाऽनुपपत्तेश्च ॥ ३२ ॥ (६)-नैकस्मिन्नसम्भवात् ॥ ३३ ॥ एवञ्चाऽऽत्माऽकार्त्स्न्यम् ॥३४॥ न च पर्य्यायादप्यविरोधो विकाराऽऽदिभ्यः ॥३५॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥ (७)-पत्युरसामञ्जस्यात् ॥ ३७॥ सम्बन्धाऽनुपपत्तेः ॥ ३८ ॥

---

(१) अनेनैकेनैव सूत्रेण विशिष्टाद्वैतिनां मते एकमधिकरणम्। द्वैतिनां मते एतदन्तमधिकरणम्।

(२) शेषादिति पञ्चम्यन्तपाठो द्वैतिनां मते।

(३) इदं सूत्रं विशिष्टाद्वैतिनां मते नास्ति।

(४) पत्तेश्चेति चसहितः पाठो द्वैतिनां नये।

अधिष्ठानाऽनुपपत्तेश्च ॥ ३९ ॥ करणवच्चेन्न भोगाऽऽदिभ्यः ॥ ४० ॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥ (८)-उत्पत्त्यसम्भवात् ॥ ४२ ॥ न च कर्त्तुः करणम् ॥ ४३ ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥ विप्रतिषेधाच्च ॥ ४५ ॥ (८) रचनाऽनुपपत्तेः पञ्चचत्वारिंशत् ॥

॥ इति वैयासिक्यां शारीरकमीमांसायां द्वितीयस्याऽध्यायस्य द्वितीयः पादः ॥ २ ॥ २ ॥

(१)-नं वियदश्रुतेः ॥ १ ॥ अस्ति

(१) आदितोऽसम्भवस्तु सेति सूत्रपर्यन्तमेकमधिकरणं विशिष्टाद्वैतिनां मते।

पंचमहाभूत जीवाद्वै २ शुद्धिनां वि
शेषपरिहार:

तु ॥२॥ गौण्यसम्भवात् ॥ ३ ॥ शब्दाच्च ॥ ४ ॥ स्योंच्चैकस्यापि ब्रह्मशब्दवत् ॥ ५ ॥ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः² ॥ ६ ॥ यावद्विकारं तु विभागो लोकवत्³ ॥ ७ ॥ (२)-एतेन मातरिश्वा⁴ व्याख्यातः ॥ ८ ॥ (३)-असम्भवस्तु सतोऽनु-

(१) स्याच्चैकस्य ब्रह्मशब्दवदिति विशिष्टाद्वैतिनां मते पाठः।

(२) शब्देभ्य इति पृथक् सूत्रं विशिष्टाद्वैतिनां मते।

(३) एतदन्तमाद्यमधिकरणं द्वैतिनां मते।

(४) तरिश्वापीति द्वैतिनां नये पाठः।

पपत्तेः ॥९॥ (४)-तेजोऽतस्तथा ह्याह ॥१०॥(५)-आपः ॥११॥(६)-पृथिव्यधिकाररूपशब्दाऽन्तरेभ्यः॥१२॥(७)-तदभिध्यानादेव तु तल्लिङ्गात्सः॥१३॥ (८)-विपर्य्ययेण तु क्रमोऽत उपपद्यते च ॥१४॥ (९)-अन्तरा विज्ञानमनसी

---

(१) पृथिवीत्येतावन्मात्रं पृथक् सूत्रं विशिष्टाद्वैतिनां मते ।

(२) शब्दान्तरादिभ्य इति द्वैतिनां मते पाठः ।

(३) चरहितः पाठो वल्लभाचार्याणांनये।

(४) एतदादिसूत्रद्वयं द्वैतिनां मते एकमधिकरणम् ।

क्रमेण तल्लिङ्गादिति चेन्नाऽविशे-
षात् ॥ १५ ॥ ( १० )-चराचरव्य-
पाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्त-
द्भावभावित्वात् ॥ १६ ॥ ( ११ )-नो-
त्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥
( १२ )-ज्ञोऽत एवं ॥ १८ ॥ ( १३ )-

(१) तेजोत इति सूत्रमारभ्य एतत्सूत्रपर्यन्तमेकमधिकरणं विशिष्टाद्वैतिनां मते।

(२) इदमेकमेव सूत्रमेकमधिकरणं विशिष्टाद्वैतिनां मते।

(३) विशिष्टाद्वैतिनां मते श्रुतेरिति पदच्छेदः। न नञः प्रश्लेषः।

(४) एतत्सूत्रोत्तरं युक्तेश्चेत्येकं सूत्रमधिकं द्वैतिनां मते।

उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥
स्वाऽऽत्मना चोत्तरयोः ॥ २० ॥ ना-
ऽणुरतच्छ्रुतेरिति चेन्नेतराऽधिकारात्
॥२१॥ स्वशब्दोन्मानाभ्यां च॥२२॥
अविरोधश्चन्दनवत् ॥ २३ ॥ अव-
स्थितिवैशेष्यादिति चेन्नाऽभ्युपगमा-
द्धृदि हि ॥ २४ ॥ गुणाद्वाऽऽलोकवत्
॥२५॥व्यतिरेको गन्धवत्॥२६॥तथा

(१) अग्रिमसूत्रेण सहायमेको योगो द्वैतिनां मते। तथैव तन्मते चेत्यस्य स्थाने हीति पाठः क्वचित्। इत आरभ्याधिकरणान्तरारम्भश्च तन्मते।

च दर्शयति ॥ २७ ॥ पृथगुपदेशात् ॥२८॥तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥२९॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥३१॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥ (१४)

(१) इदमेकमेव सूत्रमेकमधिकरणं द्वैतिनां मते ।

(२) अभीति पदरहितः पाठो वल्लभाचार्याणां मते ।

(३) ज्ञोत इति सूत्रमारभ्यैतत्सूत्रपर्यन्तमेकमधिकरणं विशिष्टाद्वैतिनां मते ।

कर्त्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥ विहारोपदेशात् ॥ ३४ ॥ उपाऽऽदानात् ॥ ३५ ॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥ उपलब्धिवदनियमः ॥ ३७ ॥ शक्तिविपर्य्ययात् ॥ ३८ ॥ समाध्यभावाच्च ॥३९॥ (१५)-यथा च तक्षोभयथा ॥ ४० ॥

---

(१) अग्रिमसूत्रेण सह विपर्ययेणोपादानाद्विहारोपदेशादित्येकयोगतया विशिष्टाद्वैतिनां मते पाठः ।

(२) कर्त्ता शास्त्रेति सूत्रमारभ्यैतत्सूत्रपर्यन्तमेकमधिकरणं विशिष्टाद्वैतिनां मते ।

(१६)-परात्तु तच्छ्रुतेः ॥ ४१ ॥ कृतप्रयत्नाऽपेक्षस्तु विहितप्रतिषिद्धाऽवैयर्थ्यादिभ्यः ॥ ४२ ॥ (१७)-अंशो नानाव्यपदेशादन्यथा चाऽपि दाशकितवाऽऽदित्वमधीयत एके ॥४३॥ मन्त्रवर्णाच्च ॥ ४४ ॥ अपि च स-

(१) कर्त्ता शास्त्रेत्याद्येतत्सूत्रान्तमेकमधिकरणं द्वैतिनां मते ।

(२) प्रतिषेधावैयर्थ्येति द्वैतिनां मते पाठः ।

(३) चरहितः पाठो विशिष्टाद्वैतिनां द्वैतिनां च मते ।

(४) चरहितः पाठो विशिष्टाद्वैतिनां द्वैतिनां च मते ।

र्यते ॥४५॥ प्रकाशाऽऽदिवन्नैवं परः ॥ ४६ ॥ स्मरन्ति च ॥ ४७ ॥ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८ ॥ असन्ततेश्चाऽव्यतिकरः ॥ ४९ ॥ आभास एव च ॥ ५० ॥ अदृष्टाऽनियमात् ॥ ५१ ॥ अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥ प्रदेशा-

(१) शादिवत्त्विति विशिष्टाद्वैतिनां नये तुशब्दसहितः पाठः ।

(२) इत आरभ्यान्यदधिकरणं द्वैतिनां मते ।

(३) प्रदेशभेदादिति चेदिति भेदशब्दसहितः विशिष्टाद्वैतिनां मते पाठः ।

दिति चेन्नाऽन्तर्भावात् ॥५३॥ (१७) न वियदश्रुतेस्त्रिपञ्चाशत् ॥

॥ इति वैयासिक्यां शारीरकमीमांसायां द्वितीयस्याऽध्यायस्य तृतीयः पादः ॥२॥३॥

(१)-तथा प्राऽणाः ॥१॥ गौण्यसम्भवात् ॥ २ ॥ तत्प्राऽक्छ्रुतेश्च ॥३॥ तत्पूर्वकत्वाद्वाचः ॥ ४ ॥ (२)-सप्त-

---

(१) एतत्सूत्रोत्तरं "प्रतिज्ञानुपरोधाच्च" इति सूत्रमेकमधिकतया पठ्यते द्वैतिभिः । तथैतदन्तमाद्यमधिकरणं तेषां मते।

(२) एतत्सूत्रमात्रमेकमधिकरणं . द्वैतिनां मते।

गतेर्विशेषितत्वाच्च ॥ ५ ॥ हस्ताऽऽदयस्तु स्थितेऽतो नैवम् ॥ ६ ॥ (२)-अणवश्च ॥ ७ ॥ (४)-श्रेष्ठश्च ॥ ८ ॥ (५)-न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ ११ ॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥ (६)-अणुश्च ॥ १३ ॥ (७)-ज्यो-

(१) एतदन्तं द्वैतिनां मते चतुर्थाधिकरणम् ।

(२) एतदन्तमिदमधिकरणं द्वैतिनां मते ।

तिराद्यधिष्ठानं तु तदामननात् ॥१४॥
प्राऽणवता शब्दात् ॥ १५ ॥ तस्य च
नित्यत्वात् ॥ १६ ॥ (८)-त इन्द्रि-
याणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥
॥ १७ ॥ भेदश्रुतेः ॥ १८ ॥ वैलक्ष-
ण्याच्च ॥ १९ ॥ (९)-संज्ञामूर्तिक्लृ-
प्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥
मांसाऽऽदि भौमं यथाशब्दमितरयोश्च
॥ २१ ॥ वैशेष्यात्तु तद्वादस्तद्वादः

---

(१) अग्रिमसूत्रेण सहैकयोगोयं विशिष्टाद्वैतिनां मते ।

(२) इदमेकमेव सूत्रमेकमधिकरणं द्वैतिनां मते ।

॥२२॥ (९)-तथा प्राणा द्वाविंशतिः॥
॥ इति वैयासिक्यां शारीरकमीमांसायां द्वितीयस्याऽध्यायस्य चतुर्थः पादः॥ २॥४॥
समाप्तोऽध्यायश्च ॥

---

## अथ तृतीयोऽध्यायः ॥

(१)-तदन्तरप्रतिपत्तौ रंहतिसम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥२॥ प्राणगतेश्च ॥ ३ ॥ अग्न्यादिगतिश्रु-

---

(१) इत आरभ्य यथेतमनेवं चेत्यन्तं नवसूत्रैः पृथक्पृथक् नवाधिकरणानि द्वैतिनां मते ।

तेरिति चेन्न भाक्तत्वात् ॥ ४ ॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति॥७॥ (२)-कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥ चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥ सुकृतदुष्कृते

(१) यथेतमनेवं चेत्येतन्मात्रं पृथक् सूत्रं द्वैतिनां मते ।

एवेति तु बादरिः ॥ ११ ॥(३)-अनिष्टाऽऽदिकारिणामपि च श्रुतम् ॥ ॥ १२ ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥ स्मरन्ति च ॥ १४ ॥ अपि च सप्त ॥ १५ ॥ तत्राऽपि च तद्व्यापारादविरोधः ॥ १६ ॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥ न तृतीये

(१) चरहितः पाठो विशिष्टाद्वैतिनां द्वैतिनां च नये । एतदादिसूत्रत्रयं पृथक्पृथगधिकरणं द्वैतिनां मते ।

(२) चरहितः पाठो विशिष्टाद्वैतिनां नये ।

तथोपलब्धेः ॥ १८ ॥ स्मर्य्यतेऽपि च लोके ॥ १९ ॥ दर्शनाच्च ॥ २० ॥ तृतीयशब्दाऽवरोधस्संशोकजस्य ॥ २१ ॥ (४)-तत्साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥ (५)-नातिचिरेण विशेषात् ॥ २३ ॥ (६)-अन्याधिष्ठिते पूर्व्ववदभिलापात् ॥ २४ ॥ अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

---

(१) तृतीये इति सप्तम्यन्तपाठो द्वैतिनां मते क्वचित् ।

(२) तत्स्वाभाव्येति विशिष्टाद्वैतिनां द्वैतिनां च मते पाठः ॥

रेतस्सिग्योगोऽथ ॥ २६ ॥ योने-
श्शरीरम् ॥ २७ ॥ (६)तदनन्तरप्रति-
पत्तौ सप्तविंशतिः ॥

॥ इति वैयासिक्यां शारीरकमीमां-
सायां तृतीयस्याऽध्यायस्य
प्रथमः पादः ॥३॥१॥

(१)-सन्ध्ये सृष्टिराह हि ॥ १ ॥
निर्म्मातारं चैके पुत्राऽऽदयश्च ॥ २ ॥
मायामात्रं तु कार्त्स्न्येनानभिव्यक्त-
स्वरूपत्वात् ॥३॥ सूचकश्च हि श्रुतेरा-

(१) इदं सूत्रमेवैकमधिकरणं द्वैतिनां मते।
(२) देहयोगाद्वा सोपीति सूत्रोत्तरमेवास्य
सूत्रस्य पाठो विशिष्टद्वैतिनां नये । एतत्सू-
त्रान्तं द्वैतिनां मते आद्यमधिकरणम् ।

चक्षते च तद्विदः ॥ ४ ॥ परोऽभि-
ध्यानात्तु तिरोहितं ततो ह्यस्य वन्ध-
विपर्ययौ ॥ ५ ॥ देहयोगाद्वा सोऽपि
॥ ६ ॥ (२)-तदभावो नाडीषु तच्छ्रु-
तेरात्मनि च ॥ ७ ॥ अतः प्रबोधोऽ-
स्मात् ॥ ८ ॥ (३)-स एव तु कर्माऽ-

(१) एतदारभ्य मुग्धेर्धसम्पत्तिरिति सू-
त्रान्तं पृथक्पृथगधिकरणं द्वैतिनां मते प्रति-
सूत्रम् ।

(२) चेत्यस्य स्थाने 'ह' इति पाठो द्वैतिनां
नये ।

(३) त्वित्यस्य स्थाने चेति पाठो द्वैतिनां
नये ।

नुस्मृतिशब्दविधिभ्यः ॥ ९ ॥ (४)-मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥ (५)-न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥ अपि चैवमेके ॥ १३ ॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥ प्रकाशवच्चाऽवैयर्थ्यात् ॥ १५ ॥ आह च

(१) नशब्दरहितः पाठो विशिष्टाद्वैतिनां मते।

(२) एतदाद्यपि स्मर्यत इत्यन्तमेकमधिकरणं द्वैतिनां मते।

(३) यथ्यर्थमिति द्वैतिनां नये पाठः।

तन्मात्रम् ॥ १६ ॥ दर्शयति चाऽथो अपि स्मर्य्यते ॥ १७ ॥ अत एव चोपमा सूर्य्यकाऽऽदिवत् ॥ १८ ॥ अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसा-मञ्जस्यादेवम् ॥ २० ॥ दर्शनाच्च ॥२१॥ ( ६ )-प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

---

(१) अग्रिमसूत्रेण सहायमेकयोगो विशिष्टाद्वैतिनां मते । इत अधिकरणान्तरारम्भो द्वैतिनां मते ।

(२) भाक्तेति द्वैतिनां मते पाठः ।

तद्[1]व्यक्तमाह हि ॥ २३ ॥ अपि संराधने प्रत्यक्षाऽनुमानाभ्याम् ॥ २४ ॥ प्रकाशा[2]ऽऽदिवच्चाऽवैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥ अतो[3]ऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥

---

(१) इत आरभ्याधिकरणान्तरं द्वैतिनां मते ।

(२) प्रकाशवेति द्वैतिनां मते पाठः । तथा प्रकाशवच्चावैशेष्यमित्येतावन्मात्रं पृथक् सूत्रं तन्मते ।

(३) एतत्सूत्रपर्यन्तं पञ्चमाधिकरणं विशिष्टाद्वैतिनां मते ।

उभयव्यपदेशात्त्वहिकुण्डलवत्॥२७॥ प्रकाशाऽऽश्रयवद्वा तेजस्त्वात्॥२८॥ पूर्ववद्वा॥ २९॥ प्रतिषेधाच्च॥ ३०॥

( ७ )-परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः॥ ३१॥ [२]सामान्यात्तु॥ ३२॥ बुद्ध्यर्थः पादवत्॥ ३३॥ [३]स्थानविशेषात्प्रकाशाऽऽदिवत्॥३४॥

---

(१) इत आरभ्याधिकरणान्तरं द्वैतिनां मते।

(२) एतत्सूत्रस्य स्थाने "दर्शनाद्" इति सूत्रपाठं द्वैतिनः कुर्वन्ति।

(३) इतस्सूत्रद्वयेनाधिकरणान्तरं द्वैतिनां मते।

उपपत्तेश्च ॥ ३५ ॥ तथाऽन्यप्रतिषेधात् ॥ ३६ ॥ अनेन सर्वगतत्वमायामशब्दाऽऽदिभ्यः ॥३७॥(८)-फलमत उपपत्तेः ॥३८॥ श्रुतत्वाच्च ॥३९॥ धर्मं जैमिनिरत एव ॥ ४० ॥ पूर्वं तु वादरायणो हेतुव्यपदेशात् ॥ ४१ ॥ (८)सन्ध्ये सृष्टिरेकचत्वारिंशत् ॥

॥ इति वैयासिक्यां शारीरकमीमांसायां तृतीयस्याऽध्यायस्य द्वितीयः पादः ॥३॥२॥

(१) न्यत्प्रतिषेधेति द्वैतिनां मते पाठः । तथेदं सूत्रमग्रिमसूत्रं चैकैकमधिकरणमिति द्वे अधिकरणे द्वैतिनां नये ।

(१)-सर्ववेदान्तप्रत्ययं चोदना-
ऽऽद्यविशेषात् ॥ १ ॥ भेदान्नेति चेन्नै-
कस्यामपि ॥ २ ॥ स्वाऽध्यायस्य
तथात्वेन हि समाचारेऽधिकाराच्च सव-
वच्च तन्नियमः ॥ ३ ॥ दर्शयति च

---

(१) भेदादिति चेन्नैकेति नेति शब्दं वि-
हाय पाठो द्वैतिनां मते ।

(२) तथात्वे हीति विशिष्टाद्वैतिनां नये
पाठः ।

(३) सववच्चेत्यस्य स्थाने सलिलवच्चेति
पठित्वा सलिलवच्च तन्नियम इत्यस्य पृथक् सू-
त्रत्वं द्वैतिन अभ्युपगच्छन्ति ।

॥ ४ ॥ (२)-उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥ (३)-अन्यथात्वं शब्दादिति चेन्नाऽविशेषात् ॥ ६ ॥ न वा प्रकरणभेदात्परोवरीयस्त्वाऽऽदिवत् ॥ ७ ॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥ (४)-व्याप्तेश्च समञ्जसम् ॥ ९ ॥ (५)-स-

(१) एतत्सूत्रान्तं प्रथममधिकरणं विशिष्टाद्वैतिनां मते। एतत्सूत्रमारभ्य तु तदपीत्यन्तमेकमधिकरणं द्वैतिनां मते।

(२) अन्यथात्वं च शब्देति चशब्दसहितः द्वैतिनां मते पाठः।

(३) प्राप्तेश्च सेत्यादि पाठो द्वैतिनां नये। तथाऽन्यथात्वमिति सूत्रमारभ्यैतत्सूत्रान्तमेकमधिकरणं विशिष्टाद्वैतिनां मते।

र्थाभेदादन्यत्रेमे ॥१०॥(६)-आनन्दा-
दयः प्रधानस्य ॥ ११ ॥ प्रियशिर-
स्त्वाद्यप्राप्तिरुपचयाऽपचयौ हि भेदे
॥ १२ ॥ इतरे त्वर्थसामान्यात्॥१३॥
(७)-आध्यानाय प्रयोजनाऽभा-
वात् ॥ १४ ॥ आत्मशब्दाच्च ॥ १५ ॥
(८)-आत्मगृहीतिरितरवदुत्तरात्
॥ १६ ॥ अन्वयादिति चेत्स्याद-

(१) इतसूत्रद्वयं पृथक् पृथगधिकरणद्वयं द्वैतिनां नये।

(२) इदमेकमेव सूत्रमेकमधिकरणं द्वैतिनां नये। तथाऽऽनन्दादय इति सूत्रमारभ्यैत-त्सूत्रान्तमेकमधिकरणं विशिष्टाद्वैतिनां मते।

वधारणात् ॥ १७ ॥ (९)-कार्य्याऽऽख्यानादपूर्वम् ॥ १८ ॥ ( १० )-समान एवं चाभेदात् ॥१९॥(११)-संम्बन्धादेवमन्यत्राऽपि ॥ २० ॥ न वा विशेषात् ॥ २१ ॥ दर्शयति च ॥ २२ ॥ (१२)-सम्भृतिद्युव्याप्त्यपि चाऽतः ॥ २३ ॥ (१३)-पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४॥ (१४)-वेधाद्यर्थभेदात् ॥ २५ ॥ (१५)-

(१) पूर्वसूत्रसहितेनानेन सूत्रेणैकमधिकरणं द्वैतिनां मते ।

(२) यामपि चेतेति द्वैतिनां मते पाठः ।

हानौ तूपाऽयनशब्दशेषत्वात्कुशाच्छन्दस्स्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥ (१६)-साम्पराये तर्त्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥ छन्दत उभयाऽविरोधात् ॥ २८ ॥ (१७)-गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः॥२९॥ उपपन्नस्तल्लक्षणाऽर्थोपलब्धेर्लोकवत्

---

(१) पूर्वसूत्रसहितेनानेन सूत्रेणैकमधिकरणं द्वैतिनां मते ।

(२) इत आरभ्य सूत्रत्रयेणैकमधिकरणं द्वैतिनां मते ।

(३) एतत्सूत्रोत्तरं यावदधिकेति सूत्रस्य ततोऽनियमस्सेत्यादीनां सूत्राणां विशिष्टाद्वैतिनां मते पाठः ।

॥ ३० ॥ (१८)-अनियमस्सर्वेषा-
मविरोधश्शब्दाऽनुमानाभ्याम्॥३१॥
(१९)-यावदधिकारमवस्थितिराधि-
कारिकाणाम्॥३२॥(२०)-अक्षरधियां
त्ववरोधस्सामान्यतद्भावाभ्यामौपस-
दवत्तदुक्तम् ॥ ३३ ॥ (२१)-इय-

---

(१) स्सर्वासामविरोधाच्छब्देति पाठा-
न्तरम् ।

(२) त्वविरोधेति द्वैतिनां मते पाठः ।
पूर्वसूत्रसहितेनानेन सूत्रेणैकमधिकरणं द्वै-
तिनां मते ।

(३) पूर्वसूत्रहितेनानेनैकमधिकरणं वि-
शिष्टाद्वैतिनां नये ।

दामननात् ॥ ३४ ॥ (२२)-अन्तरा भूतग्रामवत्स्वाऽऽत्मनः ॥ ३५ ॥ अन्यथा भेदाऽनुपपत्तिरिति चेन्नोपदेशाऽन्तरवत् ॥ ३६ ॥ (२३)-व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

---

(१) उत्तरसूत्रेण सहायमेको योगो विशिष्टाद्वैतिनां मते । तथा सत्यादय इत्यन्तमन्तराधिकरणं तन्मते ।

(२) स्वात्मन इत्यस्य स्थाने तदुक्तमिति द्वैतिनां मते पाठः ।

(३) पदेशवदित्यन्तरपदरहितः विशिष्टाद्वैतिनां द्वैतिनां च मते पाठः । प्राक् सूत्रद्वयसहितेनानेन सूत्रेणैकमधिकरणं द्वैतिनां मते ।

(२४)-सैव हि सत्याऽऽदयः ॥३८॥ (२५)-कामाऽदीतरत्र तत्र चाऽऽयतनाऽऽदिभ्यः ॥ ३९ ॥ (२६)-आदरादलोपः ॥ ४० ॥ उपस्थितेऽतस्तद्वचनात्[२] ॥ ४१ ॥ (२७)-तन्निर्धारणा[३]ऽनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥ (२८)-प्रदा-

---

(१) कामादितरेति द्वैतिनां मते पाठः। तथैत आरभ्य सूत्रत्रयेणैकमधिकरणमेतन्मते।

(२) कामादीत्यत एतदन्तं विशिष्टाद्वैतिनां मते एकमधिकरणम्।

(३) रणार्थनियेति द्वैतिनां मते पाठः।

नवदेव तदुक्तम् ॥ ४३ ॥ (२९)-लिं-
ङ्गभूयस्त्वात्तद्धि बलीयस्तदपि॥४४॥
पूर्वविकल्पः प्रकरणात्स्यात्क्रियामान-
सवत् ॥ ४५ ॥ अतिदेशाच्च ॥४६॥
विद्यैव तु निर्धारणात् ॥ ४७ ॥ द-

---

(१) अनेनैकेनैव सूत्रेणैकमधिकरणं विशिष्टाद्वैतिनां द्वैतिनां च मते ।

(२) पूर्वसूत्रसहितेनानेन सूत्रेणैकमधिकरणं द्वैतिनां मते ।

(३) अग्रिमसूत्रेण सहायमेको योगो विशिष्टाद्वैतिनां मते । उत्तरसूत्रसहितेनानेन सूत्रेणैकमधिकरणं द्वैतिनां मते ।

र्शनाच्च ॥ ४८ ॥ श्रुत्यादिबलीय-
स्त्वाच्च न बाधः ॥ ४९ ॥ अनुबन्धा-
ऽऽदिभ्यः प्रज्ञाऽन्तरपृथक्त्ववद्दृष्टश्च त-
दुक्तम् ॥५०॥ न सामान्यादप्युपल-
ब्धेर्मृत्युवन्न हि लोकाऽऽपत्तिः॥५१॥
परेण च शब्दस्य ताद्विध्यं भूयस्त्वा-
त्त्वनुबन्धः ॥ ५२ ॥ ( ३० )-एक-

(१) अनेनैकेनैव सूत्रेणैकमधिकरणं द्वै-
तिनां मते ।

(२) अनुबन्धादिभ्य इति पृथक् सूत्रं
द्वैतिनां मते । इत आरभ्य परेण च शब्देत्यन्ते-
नैकैकेन सूत्रेणैकैकमधिकरणं द्वैतिनां मते ।

(३) बहुरिश्च वेति द्वैतिनां मते पाठः ।

आत्मनश्शरीरेभावात् ॥५३॥ व्यतिरेकस्तद्भावाऽभावित्त्वान्न तूपलब्धिवत् ॥ ५४ ॥ (३१)-अङ्गाऽवबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥ मन्त्राऽऽदिवद्वाऽविरोधः ॥ ५६ ॥(३२)-भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥ (३३)-नानाशब्दाऽऽदिभेदात् ॥ ५८ ॥ (३४)-विकल्पोऽविशिष्टफलत्वात्॥५९॥(३५)-[२]काम्यास्तु यथाकामं समुच्चीयेरन्न वा

(१) त्पो विशीति द्वैतिनां मते पाठः ॥

(२) पूर्वसूत्रमिदं चेति सूत्रद्वयेनैकमधिकरणं विशिष्टाद्वैतिनां मते ।

पूर्वहेत्वभावात् ॥ ६० ॥ (३६)-अंङ्गेषु यथाऽऽश्रयभावः ॥६१॥ शिष्टेश्च ॥ ६२ ॥ समाहारात् ॥ ६३ ॥ गुण-साधारण्यश्रुतेश्च ॥ ६४ ॥ न वा तत्सहभावाऽश्रुतेः ॥ ६५ ॥ दर्शनाच्च ॥ ६६ ॥ (३६) सर्ववेदाऽन्तप्रत्ययंपट्पष्ठिः ॥

॥ इति वैयासिक्यां शारीरकमीमांसायां तृतीयस्याऽध्यायस्य तृतीयः पादः ॥ ३ ॥ ३ ॥

(१) भावादिति वल्लभाचार्याणां मते पाठः।

(२) अङ्गेष्वित्यारभ्यैतत्सूत्रपर्यन्तमेकमधिकरणं द्वैतिनां मते।

(१)-पुरुषाऽर्थोऽतश्शब्दादिति
बादराऽयणः ॥१॥ शेषत्वात्पुरुषाऽर्थ-
वादो यथाऽन्येष्विति जैमिनिः ॥२॥
आचारदर्शनात् ॥ ३ ॥ तच्छ्रुतेः॥४॥
समन्वारम्भणात् ॥ ५ ॥ तद्वतो वि-
धानात् ॥ ६ ॥ नियमाच्च ॥ ७ ॥
अधिकोपदेशात्तु बादराऽयणस्यैवं त-
द्दर्शनात् ॥ ८ ॥ तुल्यन्तु दर्शनम्
॥ ९ ॥ असार्वत्रिकी ॥ १० ॥ वि-

(१) विशिष्टाद्वैतिनां मते चशब्दरहितः पाठः ।

(२) इत आरभ्य द्वितीयमधिकरणं द्वैतिनां मते ।

भागश्शतवत् ॥ ११ ॥ अध्ययनमात्रवतः ॥ १२ ॥ नाऽविशेषात्॥१३॥ स्तुतयेऽनुमतिर्वा ॥ १४ ॥ कामकारेण चैके॥१५॥उपमर्दं च॥१६॥ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥ (२)-परामर्शं जैमिनिरचोदना चाऽपवदति हि ॥ १८ ॥ अनुष्ठेयं बादराऽयणस्साम्यश्रुतेः ॥ १९ ॥ विधिर्वा धारणवत् ॥ २० ॥ (३)-स्तुतिमात्रमुपाऽऽदानादिति चेन्नापूर्वत्वात्

(१) इदमेकमेव सूत्रमेकमधिकरणं द्वैतिनां मते ।

(२) इत आरभ्य सहकारित्वेन चेति सूत्रान्तमेकमधिकरणं द्वैतिनां मते ।

॥ २१ ॥ भावशब्दाच्च ॥ २२ ॥(४)-पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥ तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥ (५)-अत एव चाऽग्नीन्धनाऽऽद्यनपेक्षा ॥ २५ ॥(६)-सर्वाऽऽपेक्षा च यज्ञाऽऽदिश्रुतेरश्ववत् ॥२६॥ शमदमाऽऽद्युपेतस्स्यात्तथापि तु तद्वि-

(१) इदं सूत्रं नास्ति वल्लभाचार्याणां मते ।

(२) चरहितः पाठो वल्लभाचार्याणां मते ।

(३) अनेनैकेनैव सूत्रेणैकमधिकरणं विशिष्टाद्वैतिनां मते ।

३

धेस्तदङ्गतया तेषामवश्याऽनुष्ठेयत्वात् ॥ २७ ॥ (७)-सर्व्वान्नाऽनुमतिश्च प्राणाऽत्यये तद्दर्शनात् ॥ २८ ॥ अबाधाच्च ॥ २९ ॥ अपि च स्मर्यते ॥ ३० ॥ शब्दश्चाऽतोऽकामकारे ॥ ३१ ॥ ( ८ )-विहितत्वाच्चाश्रमकर्मांऽपि ॥ ३२ ॥ सहकारित्वेन

(१) पामप्यावश्येति विशिष्टाद्वैतिनां मते पाठः ।

(२) चशब्दरहितः पाठो विशिष्टाद्वैतिनां द्वैतिनां च मते ।

(३) चारे इति द्वैतिनां मते पाठः ।

च ॥ ३३ ॥ सर्व्वथाऽपि त एवो-
भयलिङ्गात् ॥ ३४ ॥ अनभिभवं च
दर्शयति ॥ ३५ ॥ (९)-अन्तरा
चांऽपि तु तद्दृष्टेः ॥ ३६ ॥ अपि च[2]
स्मर्य्यते ॥ ३७ ॥ विशेषाऽनुग्रहश्च[3]
॥ ३८ ॥ अतस्त्वितरज्ज्यायो[4] लि-

(१) सर्वथापि तु इति तुशब्दसहितः पाठो द्वैतिनां मते। तथा नियमाऽतद्रूपाभावेभ्य इत्यन्तमेकमधिकरणं द्वैतिनां मते।

(२) चशब्दरहितः पाठो विशिष्टाद्वैतिनां द्वैतिनां च मते।

(३) त्वनुग्रहं चेति द्वैतिनां मते पाठः।

(४) तरज्येति द्वैतिनां मते पाठः।

ज्ञाच ॥ ३९ ॥ (१०)-तद्भूतस्य तु नाऽतद्भावो जैमिनेरपि नियमाऽतद्रूपाऽभावेभ्यः ॥ ४० ॥ (११)-न चाऽधिकारिकमपि पतनाऽनुमानात्तदयोगात् ॥ ४१ ॥ उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥ (१२)-

(१) तु तद्भाव इति 'नाऽ' इत्येतद्रहितः पाठो द्वैतिनां मते ।

(२) मपीत्येके पतेति विशिष्टाद्वैतिनां मते पाठः ॥

(३) मपीत्येके भावशमनवचेति द्वैतिनां मते पाठः ।

वहिस्तूभयथाऽपि स्मृतेराचाराच्च
॥ ४३ ॥ ( १३ )-स्वामिनः फलश्रु-
तेरित्यात्रेयः ॥ ४४ ॥ आर्त्विज्य-
मित्यौडुलोमिस्तस्मै हि परिक्रीयते
॥ ४५ ॥ श्रुतेश्च ॥ ४६ ॥ ( १४ )-
सहकार्यन्तरविधिः पक्षेण तृतीयं त-

---

( १ ) तद्भूतस्येत्यारभ्यैतदन्तमेकमधिक-
रणं विशिष्टाद्वैतिनां मते ।

(२) इत आरभ्य विध्यादिवदित्यन्त-
मेकमधिकरणं द्वैतिनां मते ॥

(३) इदं सूत्रं विशिष्टाद्वैतिनां द्वैतिनां च
मते नास्ति ॥

द्वतो विध्यादिवत् ॥ ४७ ॥ कृत्स्न-भावात्तु गृहिणोपसंहारः ॥ ४८ ॥ मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥ (१५)-अनाविष्कुर्वन्नन्वयात् ॥५०॥ (१६)-ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥ (१७)—एवं मुक्तिफलाऽनियमस्तदवस्थाऽवधृतेस्तदवस्थाऽवधृतेः ॥ ५२ ॥ (१७) पुरुषार्थौ द्विपञ्चाशत् ॥

इति वैयासिक्यां शारीरकमीमांसायां

(१) इत आरभ्य पृथगधिकरणं द्वैतिनां मते ॥

वृतीयस्याध्यायस्य चतुर्थःपादः ॥ ३ ॥४॥
समासस्तृतीयोध्यायः ॥ ३ ॥

---

# अथ चतुर्थोऽध्यायः ।

(१)-आवृत्तिरसकृदुपदेशात् ॥१॥
लिङ्गाच्च ॥ २ ॥ (२)-आत्मेति तू-
पगच्छन्ति ग्राहयन्ति च ॥ ३ ॥
(३) न प्रतीकेन हि सः ॥ ४ ॥
(४) ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥
(५) आदित्याऽऽदिमतयश्चाऽङ्ग उ-

---

(१) अग्रिमसूत्रेण सहैकमधिकरणं वि-
शिष्टाद्वैतिनां मते ।

पपत्तेः ॥ ६ ॥ (६) आसीनः सम्भवात् ॥ ७ ॥ ध्यानाच्च ॥ ८ ॥ अचलत्वञ्चापेक्ष्य ॥ ९ ॥ स्मरन्ति च ॥ १० ॥ (७) यत्रैकाग्रता तत्राऽविशेषात् ॥ ११ ॥ (८) आ प्रायणात्तत्राऽपि हि दृष्टम् ॥ १२ ॥ (९)-तदधिगम उत्तरपूर्वाऽघयोर-

(१) इत आरभ्य त्राविशेषादित्यन्तमेकमधिकरणं विशिष्टाद्वैतिनां द्वैतिनां च मते ।

(२) आ प्रायणात्तत्र हि दृष्टमिति विशिष्टाद्वैतिनां मते पाठः ।

(३) इत आरभ्य पादसमाप्त्यन्तमेकमधिकरणं द्वैतिनां मते ॥

श्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ (१०) इतरस्याऽप्येवमसंश्लेषः पाते तु ॥ १४ ॥ (११)-अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ (१२)-अग्निहोत्राऽऽदि तु तत्कार्य्यायैव तद्दर्शनात् ॥ १६ ॥ अतोऽन्याऽपि ह्येकेषामुभयोः ॥ १७ ॥ (१३)-यदेव विद्ययेति हि ॥ १८ ॥ (१४)-भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥

---

(१) त्वाथ सम्पेति विशिष्टाद्वैतिनां मते पाठः । त्वाथ सम्पत्स्यते इति द्वैतिनां मते पाठः ॥

(१४) आवृत्तिरष्टादश ॥

इति वैयासिक्यां शारीरकमीमांसायां चतुर्थस्याऽध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥

(१)-वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ अत एव च सर्वाण्यनु ॥२॥

(२)-तन्मनः प्राऽण उत्तरात् ॥ ३ ॥ सोऽध्यक्षे तदुपगमाऽऽदिभ्यः ॥ ४ ॥

---

(१) चशब्दरहितः पाठो विशिष्टाद्वैतिनां मते ।

(२) अनेनैकेनैव सूत्रेणैकमधिकरणं द्वैतिनां मते । उत्तरमिति मण्डलिमिश्र सूत्रम्

भूतेष्वतः श्रुतेः ॥ ५ ॥ नैकस्मिन्दर्शयतो हि ॥ ६ ॥ (४)-समाना चाऽऽसृत्युपक्रमादमृतत्वं चाऽनुपोष्य ॥ ७ ॥ (५)-तदापीतेस्संसारव्यपदेशात् ॥ ८ ॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥ नोपमर्देनाऽतः ॥ १० ॥ अस्यैव चोपपत्तेरेष ऊष्मा

---

(१) इत आरभ्याधिकरणान्तरं विशिष्टाद्वैतिनां मते ।

(२) इत आरभ्य स्मर्यते चेत्यन्तमेकमधिकरणं विशिष्टाद्वैतिनां मते ।

(३) एष इति पदरहितः पाठो विशिष्टाद्वैतिनां मते ? ।

॥ ११ ॥ (६)-प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥ स्पष्टो ह्येकेषाम् ॥ १३ ॥ स्मर्य्यते च ॥ १४ ॥
(७)-तानि परे तथा ह्याह ॥ १५ ॥
(८)-अविभागो वचनात् ॥ १६ ॥
(९)-तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दाऽनुगृहीतश्शता-

---

(१) अग्रिमसूत्रेण सहैकयोगोयं विशिष्टाद्वैतिनां द्वैतिनां च मते।

(२) इत आरभ्य दक्षिणे इत्यन्तमेकमधिकरणं द्वैतिनां मते? ॥

ऽधिकया ॥ १७ ॥ (१०)-रश्म्यनु-
सारी ॥ १८ ॥ निशि नेति चेन्न
सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति
च ॥ १९ ॥ (११)-अतश्चाऽयनेऽपि
हि दक्षिणे ॥ २० ॥ योगिनः प्रति
च स्मर्य्यते स्मार्ते चैते ॥ २१ ॥(१२)

(१) अनेनैकेनैव । सूत्रेणैमकधिकरणं विशिष्टाद्वैतिनां मते ।

(२) अनेनैकेनैव सूत्रेणैकमधिकरणं विशिष्टाद्वैतिनां मते । निशि नेति चेन्न सम्बन्धादिति पृथक् सूत्रं द्वैतिनां मते ॥

(३) प्रति स्मर्येति चशब्दरहितः पाठो विशिष्टाद्वैतिनां मते ।

वागेकविंशतिः ॥

इति वैयासिक्यां शारीरकमीमांसायां चतुर्थस्याऽध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥

(१)-अर्चिरादिना तत्प्रथितेः ॥ १ ॥ (२)-वायुशब्दादविशेषाभ्याम् ॥ २ ॥ (३)-तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥ (४)-आतिवाहिकस्तल्लिङ्गात् ॥ ४ ॥ उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥ वैद्युते-

(१) अग्रिमसूत्रसहितेनानेनैकमधिकरणं द्वैतिनां मते ॥

(२) इदं सूत्रं विशिष्टाद्वैतिनां मते नास्ति।

नैव ततस्तच्छ्रुतेः ॥ ६ ॥ (५)
कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥
विशेषितत्वाच्च ॥ ८ ॥ सामीप्यात्तु
तद्व्यपदेशः ॥ ९ ॥ कार्य्यात्यये
तदध्यक्षेण सहाऽतः परमभिधानात्
॥ १० ॥ स्मृतेश्च ॥ ११ ॥ परं जैमिनि-
र्मुख्यत्वात् ॥ १२ ॥ दर्शनाच्च ॥ १३ ॥
न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥
(६)-अप्रतीकाऽऽलम्बनान्नयतीति

(१) इत आरभ्याऽऽपादपरिसमाप्त्येक-
मधिकरणं द्वैतिनां मते ।

(२) प्रतिपत्त्यभिसन्धिरित्यस्य स्थाने प्र-
त्यभिसन्धिरिति विशिष्टाद्वैतिनां मते पाठः ।

स वादराऽयण उभयथा दोषात्तत्क्रतुश्च ॥ १५ ॥ विशेषञ्च दर्शयति ॥१६॥ ( ६ ) अर्चिष्पोडश ॥

इति वैयासिक्यां शारीरकमीमांसायां चतुर्थस्याऽध्यायस्य तृतीयः पादः॥ ४ ॥ ३ ॥

( १ )-[२]सम्पाद्याविर्भावः स्वेन शब्दात् ॥ १ ॥ मुक्तः प्रतिज्ञानात्

---

(१) उभयथा च दोषेति चशब्दसहितः पाठो विशिष्टाद्वैतिनां मते ।

(२) इत आरभ्य द्वैतिनां मते सूत्रचतुष्टयं पृथक् पृथगधिकरणम् । तथा "सम्पद्याऽविहाय स्वेन शेति द्वैतिनां मते पाठः ॥

॥ २ ॥ आत्मा प्रकरणात् ॥ ३ ॥
(२)-अविभागेन दृष्टत्वात् ॥ ४ ॥
(३)-ब्राह्मेण जैमिनिरुपन्यासाऽऽदि-
भ्यः ॥ ५ ॥ चिति तन्मात्रेण त-
दात्मकत्वादित्यौडुलोमिः ॥ ६ ॥
एवमप्युपन्यासात्पूर्वभावादविरोधं
बादराऽयणः ॥ ७ ॥ (४)-सङ्कल्पा-
देव तु तच्छ्रुतेः ॥ ८ ॥ अत एव
चाऽनन्याधिपतिः ॥ ९ ॥ (५)-अ-

(१) अनेनैकेनैव सूत्रेणैकमधिकरणं द्वैतिनां मते ॥

(२) इत आरभ्य विष्कृतं हीत्यन्तमेकमधिकरणं विशिष्टाद्वैतिनां द्वैतिनां च मते ।

भावं बादरिराह ह्येवम् ॥ १० ॥ भावं जैमिनिर्विकल्पाऽऽमननात् ॥ ११ ॥ द्वादशाऽहवदुभयविधं बादरायणोऽतः ॥ १२ ॥ तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥ भावे जाग्रद्वत् ॥ १४ ॥ (६)-प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥ स्वाऽप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि॥१६॥ (७)-जगद्व्यापारवर्ज्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥ प्रत्यक्षोपदेशा-

---

(१) इत आरभ्यैकोनविंशतितमविकारेति सूत्रान्तमेकमधिकरणं द्वैतिनां मते ॥

दिति चेन्नाऽऽधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥ विकाराऽवर्त्ति च तथा हि[1] स्थितिमाह ॥ १९ ॥ दर्शयतश्चैवं प्रत्यक्षाऽनुमाने ॥ २० ॥ भोगमात्रसाम्यलिङ्गाच्च ॥२१॥ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥२२॥ ॐ ( [1]७ )-सम्पद्य द्वाविंशतिः ॥

---

(१) हि दर्शयतीति द्वैतिनां मते पाठः ॥

(२) स्थितिमाह दर्शेत्यादिरीत्याग्रिमसूत्रपाठो द्वैतिनां मते ॥ अग्रिमसूत्रेण सहैकमधिकरणं च तन्मते ॥

इति वैयासिक्यां शारीरकमीमांसायां चतुर्थस्याऽध्यायस्य चतुर्थः पादः ॥ ४ ॥ ४ ॥

समाप्तः चतुर्थोऽध्यायः ॥

ॐ

समाप्तं शारीरकमीमांसादर्शनम् ॥

॥ 'हरिः' ॐ तत्सत् ॥

---

(१) इत्येतन्मध्यगता अङ्का अधिकरणानामद्वैतिमतानुसारेणेति शिवम् ॥

